


SAPTHAGIRI (SANSKRIT)
SPIRITUAL ILLUSTRATED MONTHLY
Volume:10, Issue: 03
June-2023, Price Rs.20/-
No. of pages-24

# सप्तगिरिः

आध्यात्मिकसचित्रमासपत्रिका

जून् - २०२३

रू. २०/-



वज्रकवचसमर्पणम्
(02-06-2023)



मुत्तङ्गिकवचसमर्पणम्
(03-06-2023)



स्वर्णकवचसमर्पणम्
(04-06-2023)

तिरुमल
श्रीस्वामिनः ज्येष्ठाभिषेकमहोत्सवः
02-06-2023 तः 04-06-2023 पर्यन्तम्



तिरुमलतिरुपतिदेवस्थानानि

# पञ्चगव्योत्पत्तयः



**उर्वि नासल् ड्राप्स्**

शैत्यादिनिवारकं, नेत्रादि सामर्थ्यवर्धकश्च।



**भूमि हेर्बल् फ्लोर् क्लीनर्**

जीवाण्वादि नाशयति, भूमिं शुद्धीकरोति।



**नन्दिनी गौ-अर्क**

दैनन्दिनोपयोगेन आरोग्यवर्धकम्।



**क्षमा कौ डङ्ग् केक्स्**

यज्ञयागादिषु उपयुज्यते, वायुं शुद्धीकरोति।



**भुवति सौ डङ्ग् लाग्स्**

यज्ञयागादिषु उपयुज्यते, वायुं शुद्धीकरोति।



**अवनि धूपचूर्णम्**

सुगन्धं प्रसारयति, रक्षति च।



**धरणि अगरबत्ति**

भूमातुः सन्निहिता सुगन्धं ददाति।



**धात्रि साम्ब्राणि कप्स्**

आरोग्यं वर्धापयति।



**वैष्णवि धूप् स्टिक्स्**

वायुं शुभ्रं करोति।



**वाराहि धूप् कोन्स्**

अस्य धूमः परिसरं पवित्रं करोति।



**पृथ्वी विभूति**

ईश्वरस्वरूपं वस्तु।



**धन्षिक हेर्बल् टूथ् पौडर्**

दन्तादीन् परिरक्षति।



**हिरण्मयि हेर्बल् फेस् प्याक्**

मुखस्य वर्णच्छायादीन् वर्धापयति।



**महि हेर्बल् सोप्**

चर्म रक्षति।



**कश्यपि हेर्बल् षाम्पू**

केशान् रक्षति।




0877-2277777, 0877-2233333

# गीतामृतम्



अर्जुन उवाच -

कार्पण्यदोषोपहतस्वभावः पृच्छामि त्वां धर्मसम्मूढचेताः।
यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम्।।

(भगवद्गीता २-७)

भावः - अर्जुनः कृष्णं प्रार्थितवान् - हे कृष्ण! मम मनः दैन्यरूपेण मालिन्येन कलुषितं भवति। अतः कः धर्मः? कः अधर्मः इति विषये व्यामोहं जनयति। अहं तव शिष्यः। अहं त्वां शरणं गतः। उपदिश, निश्चयरूपेण यत् श्रेयस्करं भवति तत् वद।

# सङ्कीर्तनम्

नालं वा तव नयवचनं
चेलं त्यज ते चेटी भवामि ।।नालं।।

चल चल मम संसद्घटने किं
कुलिशहृदय बहुगुणविभव
पुलकित तनु संभृत वेदनया
मलिनं वहामि मदं त्यजामि ।।नालं।।

भज भज ते प्रियभामां सततं
सुजनस्त्वं निजसुखनिलय
भुज रे भारति भोगि भवसि किं
विजयीभव मद्विधिं वदामि ।।नालं।।

नय नय मामनुनयनविधं ते
प्रियकान्तायां प्रेमभवं
भयहर वेङ्कटपते त्वं
मत्प्रियो भवसि शोभिता भवामि ।।नालं।।



(अन्नमाचार्यसङ्कीर्तनम्)

# योगः कर्मसु कौशलम्

प्राचीन भारतीय दर्शनेषु 'योगः दर्शनम्' अन्यतमम्। दर्शनानि द्वादश सुप्रसिद्धानि सन्ति। तेषम्मद्ध्ये तु षट् वैदिक दर्शनानि षट् अवैदिक दर्शनानि। वैदिकदर्शनेषु विशिष्टस्थानं प्राप्नोति 'योग' दर्शनम्। अस्य प्रवर्तकाः प्राचीन महर्षयः। पतञ्जलि विरचित 'योगसूत्राणि' अत्यन्तं विशिष्टभूतानि। तत्र महर्षिः पतञ्जलिःयोगः शास्त्रम् अष्टविधरूपेण विभक्तवान्। अष्टानाम् अङ्गानां मध्ये आसनं मित्यङ्गं अन्यतमम्। तस्य अभ्यसनेन शरीसौष्ठवं परिवर्धते। सर्वैरपि यमनियमाद्याचरणेषु श्रद्धा देया। पतञ्जलिः योगसूत्र ग्रन्थे प्रथमसूत्रं 'अथ योगानुशासनम्' इति निर्दिष्टवान्। अस्य योगस्य मुख्यतम उद्धेश्यं किमित्युक्तौ आत्मसाक्षात्कारः एव।

आसनानि अनेकानि तानि कदा करणीयनि कदा करणीयानि, कथं, कस्य साहाय्येन करणीयनि इत्यादि नियमाः सन्ति। एकैकस्य आसनस्य साधनेन बहुविध प्रयोजनानि लभ्यन्ते।

'प्राणायामः' इति विधिं बहोः कालात् पूर्वमेव अस्मदीय वैदिक महर्षयः सूचितवन्तः। इदानीमपि, क्रियमाण वैदिक प्रक्रियासु अत्यन्त मुख्यतमं भवति। 'सन्ध्यावन्दनम्'। तिसृषु सन्ध्यासु सन्ध्यावन्दानं करणीयम्। एकैकस्मिन् सन्ध्यावन्दने पञ्च वारान् प्राणायामः करणीयः। एवं एकैकस्मिन् दिनं आहत्य पञ्चदश वारान् प्राणायामः आचरणीयाः भवति। एवम् आचरणेन नाडीशुद्धिः, आरोग्य वृद्धिः श्च भवतः आसनेषु सूर्यनमस्कारास्य विशिष्ठ स्थानं भवित। प्रत्यक्षदेवं सूर्यनारायणमुद्धिश्य सूर्यस्य द्वादश नामानि उच्चार्य एकैकस्य नाम्नः कृते, एकैकं नमस्काररुपम् आसनम् आचरणीयम्। तेन सूर्यः प्रसन्नोभूत्वा तेषां आयुर्वर्चसोः अभिवृद्धिं करोति इति वेदवचनम्।

इदानीं तन काले एतत् योगशास्त्रम् आविश्वं प्रचारितम्। आचार्य राम्देव् बाबा, सद्गुरु जग्गीवासुदेवः, अभिनव पतञ्जलिः इति नम्ना ख्यातः आचार्य बि.के.अय्यंगार् महोदय प्रभृतभिः बाहुल्य प्रचारेण युनेस्को नाम्ना प्रसिद्धा संस्था प्रतिवर्षं जून् मासस्य २१ दिनाङ्के अन्ताराष्ट्रीय 'योग दिवसः' आचरणीयः इति उदघोषितवती। सर्वे योगाभ्यासं कृत्वा कर्मयोगिनः भवन्तु। सर्वे जनाः सुखिनो भवन्तु। इति श्यम्।

तिरुमल-तिरुपतिदेवस्थानानां सचित्रमासपत्रिका
आध्यात्मिकसचित्रमासपत्रिका

# जून् २०२३

सम्पुटिः-१० सञ्चिका-०३

श्रीशोभकृत्संवत्सरस्य ज्येष्ठशुक्लद्वादशी तः
श्रीशोभकृत्संवत्सरस्य आषाढशुक्लद्वादशी पर्यन्तम् - १९४४

*वेङ्कटाद्रिसमं स्थानं
ब्रह्माण्डे नास्ति किञ्चन ।
वेङ्कटेशसमो देवो
न भूतो न भविष्यति ॥*





गौरवसम्पादकः:-
श्री ए.वी.धर्मारेड्डि I.D.E.S.,
कार्यनिर्वहणाधिकारी (F.A.C.), ति.ति.देवस्थानानि

प्रकाशकः - प्रधानसम्पादकः
डा॥ के.राधारमणः, M.A., M.Phil., Ph.D.,

सम्पादकः - डा॥ वि.जि.चोक्कलिङ्गम्, M.A., Ph.D.,

मुद्रापकः - श्री पि.रामराजु, M.A.,
प्रत्येकाधिकारी,
ति.ति.दे.मुद्रणालयः,
तिरुपतिः।

छायाचित्रग्रहणम् - श्री पि.एन्.शेखरः, छायाचित्रग्राहकः, ति.ति.दे.
श्री बि.वेङ्कटरमणः, सहायक-छायाचित्रग्राहकः, ति.ति.दे.

**मुखचित्रम् –** तिरुमल श्रीस्वामिनः ज्येष्ठाभिषेकमहोत्सवः।
**अन्तिमरक्षापुटः –** श्रीनम्माळ्वार् शात्तुमोर।

सूचना
मुद्रितलेखानां विचाराः लेखकानामेव।
एतद्विषये अस्माकं दायित्वं नास्ति।
*— प्रधानसम्पादकः*

**सङ्केतः**
प्रधानसम्पादकः,
सप्तगिरिः, ति.ति.देवस्थानानि
तिरुपतिः - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९, २२६४३६०
सूचनानाम्, आक्षेपाणां च कृते
सम्पर्कं कुर्वन्तु -
sapthagiri.helpdesk@tirumala.org

एका पत्रिका : रू.२०/-
वार्षिकग्राहकत्वम् रू.२४०/-
आजीविक ग्राहकत्वम् रू.२४००/-

# ज्येष्ठाभिषेकः तिरुमला

- आर्.अनन्तकृष्णशर्माः
चरवाणी - ८९७८५८७७५१

कलियुग प्रत्यक्ष देवस्य भगवतः वेङ्कटेश्वरस्य क्रियमाणेषु उत्सवेषु अन्यतमः अभिदेयकाभिषेकः अथवा ज्येष्ठाभिषेकः। अस्य उत्सवस्य माहात्म्यं वैखानस दिव्य भगवद्शास्त्रेषु अन्यतमेन महर्षि भृगुणा विरचिते 'क्रियाधिकारकल्पः' इत्यत्र अमुम् उत्सवमधिकृत्य विशेषतया वर्णितमस्ति। मलयप्पस्वामिनः उत्सवमूर्तिः अत्यन्त प्राचीनतमा। चतुर्युगमूर्तिः इति चतुर्मुखब्रह्मकरार्चितत्व कारणेन घृवमूर्तेः यावत् वैशिष्ट्यं वर्तते तावदेव वैशिष्ठ्यम् अस्य मलयप्प मूर्तेः अपि। एतादृश उत्सवमूर्तिः क्रियमाणेषु उत्सवेषु अन्यतमः ज्येष्ठाभिषेकः।

ज्येष्ठमासे क्रियमाणः त्रिदिवसीयः ज्येष्ठानक्षत्रसमये अयम् उत्सवः समापनीयः। तेन उत्सवमूर्तौ विद्यमान दिव्यशक्तिः अधिकतमा भवति इति आगम वचनम्। तमाधारीकृत्य अमुम् उत्सवं दिनत्रयमाचरन्ति। आवत्सरम् उत्सवमूर्तेः अलङ्कृतं स्वर्णकवचं निष्कास्य आगमोक्तरीत्या विविधोपचारैः पूजाम् आचरन्ति।

प्रथमदिने अष्टोत्तरशत कलशान् संस्थाप्य विविध द्रव्यैः सम्पूजयन्ति। तस्मिन् दिने प्रथमतः अग्निं संस्थाप्य विष्णु, सुदर्शन, नारसिंह महामन्त्र होमान् आचरन्ति। पूर्णाहुतिम् कृत्वा होमरक्षा सूत्रेण मलयप्पस्वामिनं अलङ्कृत्य, ततः परम् अष्टोत्तरशत कलशात्मक महाभिषेकम् आचरन्ति। ततः परं स्वामिनं नवरत्नखचित कवचेन अलङ्कुर्वन्ति। एवमेव द्वितीय दिनेऽपि विशिष्टहोमादीन् कृत्वा, ततः परम् अभिषिञ्च्य मौक्तिक कवचं समर्पयन्ति। अन्तिमे दिने पुरुषसूक्त, श्रीसूक्त, महानारायणोपनिषद् होमान् कृत्वा सहस्रकलशात्मक महाभिषेकं कृत्वा, तेन अभिषेकजलेन भक्तान् सम्प्रोक्षन्ति। तस्मिन् दिने विशेषखाद्यपदार्थान् निवेद्य नूतनतया निर्मित स्वर्णकवचं मलयप्पस्वामिनः कृते समर्पयन्ति। अस्य उत्सवस्य आचरणेन देशराष्ट्रयोः अधिकारिणः सर्वे भक्तजनाश्च पूर्ण मनोरथा भवति इति वक्तुं निस्सन्देहः।

'दुर्लभं मानुषं जन्म' इति उक्तरीत्या आजीवने यदाकदापि एतादृश वैशिष्ट्य पूर्ण पूजा विशेषम् अवश्यं दर्शनीयम्। परं समेषां भक्तजनानां कृते एतद् दर्शनं कष्टदायकम्। एतदर्थं तिरुमलतिरुपतिदेवस्थानानि दूरदृष्ट्या समग्रविश्वे स्थितानां भगवतः वेङ्कटेश्वरस्य भक्तजनानां कृते एस्.वि.बि.सि. माध्यमेन दर्शयन्ति।

॥काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी॥





# योगः उपयोगाः

- का. विरिञ्चिः
चरवाणी - ८१४३१५०८३३

१. योगाभ्यासेन शरीरस्थानि अस्थीनि दृढति शक्तिमन्तः भवन्ति।

२. रोगनिरोधकशक्तिः वर्धते।

३. योगाभ्यासेन मिताहारेणापि दार्ढ्यं लब्धुं शक्नुवन्ति।

४. अनिद्रतां दूरीकर्तुं योगः सुलभोपायः भवति।

५. बि.पि.(रक्त वेगतां) नियन्त्रयति।

६. जीवक्रियायाः वर्धनं योगाद्वारा सम्भवति।

७. योगाभ्यासेन हृदयस्पन्दनसमतौल्यं भवति।

८. शरीरस्थअन्तश्राव विधीन् अभिवृद्धये योगा अत्यन्त उपकारी भवति।

९. योगाभ्यासेन शारीरकनैपुण्याता अभिवृद्धिः भवति।

१०. योगाभ्यासेन अस्मृतिः नश्यति।

११. योगाभ्यासेन शरीरनैपुण्यं वर्धते।

१२. स्मृति भ्रंशः न्यूना भवति योगाभ्यसेन।

१३. योगाभ्यासेन शरीरस्थित मलिनानि सम्पूर्णतया धमनेभ्यः बहिः आगच्छन्ति।

१४. योगाभ्यासेन जीर्णवृद्धिः जायते।

१५. योगाभ्यासेन एकाग्रता वर्धते।

१६. योगाभ्यासेन प्राणशक्तिः वर्धते।





## एप्रिल् २०२३ लघुप्रश्नोत्तरी समाधानानि

| | |
|---|---|
| १. व्यासस्य | ९. माद्री |
| २. रावणः | १०.कालिकायाः |
| ३. धर्मराजः | ११. मूषिकः |
| ४. देवकी | १२. वेदवती |
| ५. भीमस्य | १३. अर्जुनः |
| ६. लक्ष्मण कुमारः | १४.चित्राङ्गदः, विचित्रवीर्यः |
| ७. कच्छपी | १५.अयोध्या |
| ८. माद्री | |

(तदनन्तरम्)

भूदेवीं पालयित्वा हरिः सद्यः वैकुण्ठं गन्तुं न इच्छति स्म। स्वस्य रूपं दृष्ट्वा आदिलक्ष्मीः भीता भवति वा इति शङ्कितवान्। अपि च यथा कामयां भूदेव्या सह भवितुम् इच्छतिस्म। तेन कारणात् गरुत्मन्तं वैकुण्ठे स्थितं क्रीडाद्री पृथिव्याम् अनेतुम् आज्ञापयत्। स्वामिन् अत्यन्तसन्निहितः गरुत्मान् अस्तु इति वदन् वैकुण्ठं गतवान्। आदिलक्ष्मीं मिलितवान् अनन्तर वृत्तान्तः :-

''अम्ब! हरिः भूलोकं गत्वा हिरण्याक्षः इति राक्षसं मारयितुं समुद्रे निमग्ना भूमिं पालयितुं वराहरुपं धृतवान्। स्वस्य तीक्ष्णैः दंष्ट्रैः हिरण्याक्षस्य शिरं खण्डखण्डं कृतवान्। तदनन्तरं क्षीणां भूमेः स्वस्य मूलस्थाने स्थातुम् अवकाशं कल्पितवान्। अपि च हरिः इदानीं भूलोके एव वस्तुम् इच्छति स्म। एतत् कारणादेव वैकुण्ठे स्थितं क्रीडाद्रि आनेतुं माम् आज्ञापितवान्।

अम्ब! भवती क्रीडाद्रि भूलोकं नेतुम् अनुमतिं ददातु, अतः एव भवत्याः समीपम् आगतवान्''

इति सविनयम् उक्तवान्

गरुत्मान्।

आदिलक्ष्मीः गरुत्मतः मुखं दृष्ट्वा तस्य वचनं शान्ततया शृणोतिस्म। अनन्तरं गरुत्मान् इतोपि वराहरूपेण भवती पश्यति चेत् भीता भवतीति सन्देहं व्यक्तीकृतवान्। अनन्तरम् आदिलक्ष्मीः अहं क्रोडे स्वामिं त्यक्तमपि वा रूपं धारयति स्म, अहं हरेः कोष्ठे एव स्याम्, तस्य रूपेण किमपि मानसिकविकारं न भवामि। यदि हरिः तद्रूपेण वैकुण्ठं प्रति प्रत्यागन्तुं न इच्छति तर्हि अहं स्वयं धरणीम् आगमिष्यामि अपि अहं तस्य हरेः वक्षः स्थले स्थास्यामि। यदा अपि खगेन्द्र! एकं वचनं सावधानतया शृणोतु, मस्त्यरूपेण जलसागरे एकान्ते तरति, अहं हरेः वक्षस्थले एव अस्मि। यदा कूर्मरूपेण समुद्रे मग्नं मन्दरं पर्वतं वहति तदा अपि तस्य सहचरी अस्मि।

अङ्गुष्ठमात्र देहेन वटपत्रस्य शयनसमये अपि अहं वक्षस्थलशयिनी एव। चन्दिका चन्द्रात् भिन्ना यथा न भवति तथा अहं भगवन्तं कस्मिन् अपि अवतारे न त्यजामि। अतः

- डा।। सि.शिवारेड्डि
चरवाणी - ९४४०८५९८७२





अहम् इदानीमेव मम परिवारेण सह भूलोकं गत्वा वराहरूपधारिणः वक्षस्थले तिष्ठामि। स्वामी भयङ्कररूपी भवतु वा विकृतरूपी वा भवतु मम भयं नास्ति। हरेः भूदेव्या सह क्रीडादया भ्रमणं न दोषः, अतः स्वामिनः आज्ञानुसारं क्रीडाचलं भूलोकं नयतु यत्र स्वामी भूदेव्या सह गन्तुम् अवकाशः अस्ति तत्र भ्रमितुं शक्नोति।

अनन्तरं लक्ष्मीदेवी स्वकलाः वैकुण्ठं त्यक्त्वा एकया कलया भूलोकम् आगतवती।

स्वामी क्रीडाद्रिम्, अद्रेः उपरि नीलादेवीं, श्रीदेवीं दूरतया दृष्टवान्। अपि च श्रीदेव्याः परिवारमपि दृष्ट्वा अहं भूलोके एकाकी न, वैकुण्ठे स्थितस्य परिवारस्य सर्वस्य भूलोकगमनेन अहं संसारी अभवम्, इति मुदितवान्। श्रीदेव्याः आगमनेन सस्यानाम् अवकाशः एव नास्ति इति मुदितवान्। गरुत्मन्तं स्वामी ''पुष्करिण्याः पश्चिमभागे तिष्ठतु'' इति उक्तवान्। वराहरूपधारिणं स्वामिनं द्रष्टुम् आगताः देवताः भय, विनय, सम्भ्रमैः स्त्रोत्रं कृतवन्तः। तं स्तोत्रं तरिगोण्ड वेङ्गमाम्बा दण्डक रूपेण लिखितवती।

श्रीमन्महाश्वेत सक्रोडरूपाय निर्लेप!
बोधप्रदीप प्रतापोज्ज्वला!
श्रीप! हिरण्याक्ष कारुण्य देहाद्रि दम्भोळिधरा।
सुराधार! धात्रीतलोद्धार!
भर्माद्रिधीशा जगत्पूर! चित्सारभूता!
भवाम्बोधिपोत! सुमोक्षप्रदाता! गुणातीत!
वेदार्थनिर्णेत। पूतात्मा! धाता!
महापञ्च भूत प्रभूति प्रपञ्चाकरा!
श्रीकरा! सुप्रसन्नात्मवै मम्मु रक्षिञ्चुमीशा! रमाधीश!
नी सत्प्रभावम्बु लेन्नन् सहस्राननुण्डैन दानोपुने!
माकु शक्यम्बे नी युग्रदंष्ट्राकराळास्यमुन् नी सटल् वेडि
चूड्कुल् महा भीकराकारमुन् चूड माके यसाध्यम्बुगादोचे
लोकम्बुनन्मानव व्रतामु ल्सूचि भीतिल्लरे!
देव मम्मुद्धरिम्पन् सदा सौम्य रूपम्बु वे दाल्चि
श्रीभूमिनीळासमेतुण्डवै
देव तिर्यङ्मनुष्याख्य जीवातुलं ब्रोचुचुने,
सर्वनित्योत्सवम्बुल् महाभक्त बृन्दम्बु लर्पिम्पगा दिव्यलीला
प्रभावम्बुलं जूपुचुन् मीरु क्रीडान चलम्बन्दु वेंचेसि
युण्डुण्डहो!,
पूर्णकमा! गुणस्तोम! देलोत्तमा! देवता मार्वभौम तरिगोण्ड
धामा!
नृसिंहा! हृतांहा! वराहावतारा! नमस्ते नमस्ते नमः इति

स्तुतिं करोति चेत् वराहदेवः देवेन्द्रादीन् सुप्रसन्न दृष्ट्या अवीक्षयत्।

(अनुवर्तिष्यते)

# सुष्ठु गृहीतः चौरः

नीतिकथा



देवदत्तः नाम कोऽपि धनिकः आसीत्। एकदा तस्य धनस्यूतः लुप्तः। तस्य गृहे षड् भृत्याः आसन्। तेषु एव एकः चौरः स्यात्, इति तस्य मतम्। चौरं ग्रहीतुं सः वीरबलं साहाय्यम् अयाचत। वीरबलः अवदत्. 'मित्र! अद्य सायङ्काले तव सर्वान् भृत्यान् मम गृहं प्रेषय'' इति।

यथानिश्चितं सर्वे सेवकाः वीरबलस्य गृहम् प्रति आगताः। वीरबलेन पूर्वमेव सर्वेषां कृते समानोन्नतयः यष्टिकाः आनीताः। सः सेवकान् अवदत्. ''भोः पश्यंतु, एताः मायायष्टिकाः। तासु एकां यष्टिकां स्वीकृत्य सर्वैः देवदत्तस्य गृहं गन्तव्यं, श्वः प्रभाते पुनरागन्तव्यम्। येन केनापि धनस्यूतः चोरितः स्यात् तस्य यष्टिका अङ्गुलिमात्रं दीर्घा भविष्यति।''

रात्रौ सर्वे भृत्याः सुखेन निद्राम् अकुर्वन् ऋते एकस्मात्। सः अचिन्तयत्, ''श्वः प्रातः मम चौर्यं प्रकटितं भवेत्। अतः अहम् अधुना एव मम यष्टिकाम् अङ्गुलिमात्रं कर्तयामि।'' इति चिन्तयित्वा तथा कृत्वा सः सुखेन सुप्तः। अन्येद्युः लघुयष्टिकां दृष्ट्वैव वीरबलेन चौरः सम्यक् ज्ञातः गृहीतः च। अपराधी भृत्यः वीरबलस्य पादयोः पतित्वा स्वस्य अपराधम् अङ्गीकृतवान् धनस्यूतं च प्रत्यर्पितवान्।



# अष्टाङ्ग योगः

## पतञ्जलिमुनिः

टीका - श्रीमती डॉ. ई.पी.नागलक्ष्मी
संस्कृतानुवादम् - का. विभावरी

यमनियमासन-प्राणायाम-प्रत्याहार-धारण-ध्यान समाधयोऽष्ठावङ्गनि योगानुष्ठानस्य अष्ट-अङ्गाः भवन्ति। अङ्गः नाम विधानस्थितिः -



१.यमः - अहिंसा सत्यमस्तेय ब्रह्मचर्यापरिग्रहाः यमाः (योगसूत्रम् -२-३०) अहिंसा, सत्यम्, अचौर्य, ब्रह्मचर्या, दानस्य अस्वीकारः। एतान् पञ्च 'यमान्' यः अनुसरति सः योगाभ्यासाय अर्हः भवति।



२.नियमः - शौचसन्तोषतपः स्वाध्यायेश्वरप्राणिधानानि नियमाः। (योगसूत्र २-३२) शौचम् - बाह्य, आन्तरशुद्धिः सन्तोषः - दुःखं त्यक्त्वा सन्तुष्टे भवितव्यम् ; तपः -मानावमानेषु, शीतोष्ण सुखदुःखेषु समभावना ; स्वाध्यायः - सद्ग्रन्थेषु पठनं पाठनं, श्रवणं मननम् ; ईश्वरप्रणिधानम् - प्रत्येकं कार्यस्य फलापेक्षया विना परमेश्वर समर्पणं करणीयम्।



३.आसनम् - स्थिरसुखमासनम् (योगसूत्र-२-४६)

स्थिरेण सुखेन या स्तिथिर्भवति तद् आसनम्। स्थिरासनं यदा न भवति तदा प्राणायाम साधनं न अभ्यसितुं शक्यते। स्थिरासनं नाम साधकस्य शरीर आसनस्य सिद्धिः तेन द्वन्द्वानि (शीतोष्णादिः) साधकं न बाधन्ते। तदा शीतोष्णं, सुखदुःखं, मानावमानो इत्यादीनि द्वन्द्वानि न बाधते।





४.प्राणायामः - तस्मिन् सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः उच्छ्वास निःश्वासयोः गतिनिरोधेन प्राणायामः (योगसूत्रम् २-५०) सिध्यति। प्राणायाम प्रक्रियातः उच्छ्वास निश्वासौ सधक वशौ भवतः पूर्णतया न्यूना भवति। तदा मनः चाञ्चल्यं त्यजति।



१. यमः, २.नियमः,३. आसनम्, ४.प्राणायामः,५.प्रत्याहारः, ६.धरणा, ७.ध्यानम्, ८.समाधिः

यैः एते अष्टाङ्गानि योगाभ्यासरूपेण स्वीकर्तुम् इच्छन्ति तेषां प्रथमं केचन नियमाः अनुसरणीयाः।

५.प्रत्याहारः - स्वविषयासम्प्रयोगे चित्तस्वरूप पानुकार इवेन्द्रियाणां प्रत्याहारः।(योगसूत्र -२-५१) तदा उत्कृष्ट इन्द्रिय वशीकरणं भवति। साधकस्य इन्द्रियाणि बाह्यविषयसम्बन्धं न प्राप्य निरोधं प्राप्य मनसा ऐक्यं भवन्ति चेत् प्रत्याहारः। यदि योगी इन्द्रियाणां बाह्यरूपप्राप्तिनिरोधं कृत्वा मनसा ऐक्यं करोति चेत्, सम्पूर्ण इन्द्रियनिग्रहं प्राप्नोति।

६.धारणा - देशबन्धश्चित्तस्य धरणा (योगसूत्र३-१) एकत्र एव ध्यानस्थिरीकरणमेव धरणा। शरीरे वा, बाह्ये वा एकम् आलम्बनम् आश्रित्य मनसः स्थिरेण स्थितिः एव धारणा। प्राणायाम सिद्धिद्वारा धारणा आगच्छति।

७.ध्यानम् -तत्र प्रत्ययैकतावता ध्यानम् (योगसूत्र-३-२) एकभाव प्रवाहरूप ज्ञानमेव ध्यानम्। शिरसः वा हृदयेवा एकं लक्ष्यं स्वीकृत्य धारणं कृत्वा शरीरे अन्यान् भागान् विना केवलं लक्ष्य भोगभ्यः एव स्पर्शानुभवः प्राप्यते सा स्थितिः एव धारणा इति उच्यते। तदा किञ्चित् कालपर्यन्तं चित्तं स्थिरं करोति चेत् तदेव ध्यानं भवति।



८.समाधिः - तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः(योगसूत्र-३-३)९. रूपाणि त्यक्त्वा केवल अर्थ भासनमेव समाधिः इति उच्यते। ध्याने ध्येयरूपस्यैव भावना भवति चेत् समाधिः जायते। अस्यां स्थितौ चित्तस्य स्वरूपम् एव न भवति। एतदेव समाधिः इत्युच्यते।



तिरुचानूरु पद्मावतीदेव्याः वसन्तोत्सवः ०४-०५-२०२३ तः ०६-०५-२०२३ पर्यन्तम् आयोजितः। अस्मिन् सन्दर्भे श्री पद्मावती देव्याः स्नपन तिरुमञ्जन महोत्सवः आयोजितः। स्नपन तिरुमञ्जन महोत्सवः आयोजितः। अनन्तरं पद्मावती देवी स्वर्णरथोपरि विहृतवती।



०४-०५-२०२३ दिनाङ्के पार्वतीपुरं मन्यं मण्डले सीतंपेटा ग्रामे नूतनतना निर्मितस्य श्रीवेङ्कटेश्वरस्वामिनः आलय शिखर महासम्प्रोक्षणे विशाख शारदापीठाधीशाः श्री श्री श्री स्वरूपानन्देन्द्र सरस्वती स्वामिनः भागं गृहीतवन्तः। ति.ति.दे.सम्युक्त कार्यनिर्वहणाधिकारी श्री वि.वीरब्रह्मम्, ऐ.ए.एस्. महोदयः, अर्चकाः अपि भागं गृहीतवन्तः। अस्मिन् सन्दर्भे श्रीस्वामिनः कल्याणोत्सवः अपि आयोजितः।



०४-०५-२०२३ दिनाङ्के नरसिंह जयन्ती सन्दर्भे तिरुमलक्षेत्रे वसन्तमण्टपे आयोजितस्य श्री नरसिंहस्वामिनः पूजा कार्यक्रमस्य दृश्यम्।



०५-०५-२०२३ दिनाङ्के श्रीवेङ्कटेश्वरस्वामिनः दर्शनार्तमागतस्य विशाख शारदापीठाधीशस्य श्री श्री श्री स्वरूपानन्देन्द्र सरस्वती स्वामिनः श्री श्री श्री स्वात्मानन्देन्द्र सरस्वती स्वामिनस्य ति.ति.दे. कार्यनिर्वहणाधिकारी श्री ए.वि.धर्मरेड्डि ऐ.डि.ई.एस्.महोदयः अपि च डा.आकेळ्ल विभीषणशर्मा डैरेक्टर् अन्नमाचार्य प्राजेक्ट् महोदयः च अपि स्वागताह्वानं कृतवन्तः।



तिरुमल क्षेत्रे २१-०४-२०२३ दिनाङ्के स्वामिनः दर्शनान्तरं ति.ति.दे. कार्यनिर्वहणाधिकारिः श्री ए.वि.धर्मरेड्डि ऐ.डि.ई.एस्., महोदयः आन्ध्रप्रदेश गवर्नर् मान्य श्री एस्.अब्दुल् नजीर् महोदयाय श्री स्वामिनः चित्रपट समर्पणं कृतवन्तः। अस्मिन् चित्रे श्री अनिल् सिङ्घाल ऐ.ए.एस् महोदयः गवर्नर् महोदयस्य प्रत्येक कार्यदर्शी अपि भागं गृहीतवन्तः।



१५-०५-२०२३ दिनाङ्के ति.ति.दे. पालकमण्डल्याः एक्स् अफिषियो सभ्यरूपेण देवदाय शाखा कमीषनर् श्री सत्यनारायण महोदयः प्रमाण स्वीकारं कृतवान्। श्री सत्यनारायण महोदयाय प्रसादं दत्तवतः ति.ति.दे. संयुक्तकार्यनिर्वहणकारिणः श्री वीरब्रह्मम् ऐ.ए.एस्., महोदयस्य चित्रम्।



# महाभारतान्तर्गत - यवक्रीतोपाख्यानम्

- डा. बी.कामाक्षम्मा, चरवाणी - ७२९०८०९७१९

(तदनन्तरम्)

सः अकुतोभयः यवक्रीतः चङ्क्रम्यमाणः एकदा वैशाखमासे रैभ्यमुनेः आश्रमं जगाम। आश्रमः पुष्पितवृक्षैः शोभायमानः आसीत्। तत्र एकान्ते वने रैभ्यमुनेः स्नुषाम् अपश्यत्। तस्याः अतिशयसौन्दर्येण मोहितस्सन् निर्लज्ञो भूत्वा मामुपतिष्ठस्वेति (सेवस्व) उक्तवान्। सा रैभ्यमुनेः पराक्रमं स्मृत्वा धैर्यं धारयन्ती पुनः यवक्रीतात् बिभ्यती अनिच्छापूर्वकमेव अङ्गीकृतवती। सः तामुन्नीय एकान्तप्रदेशं नीतवान्। तत्र तां पापसमुद्रे मज्ञयामास। तदा रैभ्यः आश्रमं प्राविशत्। तत्र रुदतीं स्नुषां (परावसोः भार्यां) मधुरवचोभिः सान्त्वयन् रोदनकारणमपृच्छत्। सा अतीतवृत्तान्तं सर्वं निवेदयमास। यवक्रीताचरितं सर्वं स्नुषायाः श्रुत्वा रैभ्यस्य हृदये प्रचण्डाग्निर्ज्वलितः। सः जटामेकाम् अवलुच्य होमाग्नौ अक्षिपत्। तदा तस्मात् अग्निकुण्डात् पुत्रवधूसमानाकृतः नारी समुत्पन्ना। पुनः रैभ्यः अन्यां जटाजूटम् अवलुच्य होमाग्नौ प्राक्षिपत्। ततः घोराक्षः भीमदर्शनः राक्षसः समुत्पन्नः। तौ आवयोः किं कार्यं करवावः इति अब्रूताम्। तदा क्रुद्धः रैभ्यः यवक्रीतः इत्यतामिति आदिशत्। तथेत्युक्त्वा तौ यवक्रीतजिघांसया तमन्वगच्छताम्। यज्ञकुण्डात् समुत्पन्ना सा सुन्दरी यवक्रीतं मोहयित्वा तस्य कमण्डलुं जहार। कमण्डल- अपहरणात्परं तस्य शरीरम् उच्छिष्टं जातम्। तस्मिन्नेव समये राक्षसः हस्तेन शूलं धृवा जिघांसया यवक्रीतमन्वगच्छत्। शूलपाणिं राक्षसं दृष्ट्वा सः सरसः अभिमुखं धावति स्म। यदा सः अग्रे गच्छति जलं शुष्कं भवति स्म। जलहीनं सरः दृष्ट्वा सः समस्तसरिताम् अभिमुखं धावितवान्। यदा अयं गतः सर्वाः अपि सरितः शुष्काः भवन्ति स्म। ततः सः भयभ्रान्तस्सन् पितुः अग्निहोत्रगृहस्य समीपं गतः। तस्मिन् अग्निहोत्रगृहे एकः शूद्रजातीयः रक्षकः नियुक्तः आसीत्। सः अन्धः। यदा यवक्रीतः प्रवेष्टुमागतः तदा द्वारे एव तं निगृहीतवान्। अन्धेन रक्षकेण निगृहीतं यवक्रीतं राक्षसः शूलेन मारयामास। ततः सः राक्षसः तस्या नार्या सह रैभ्यस्य सेवारतो जातः।

भरद्वाजः स्वाध्यायं समाप्य समिधः गृहीत्वा आश्रमे प्राविशत्। भरद्वाजमुनिः होमशालां यदा प्रविशति तदा पञ्च

पावकाः उत्थाय स्वागतं कुर्वन्ति स्म। यवक्रीतस्य मरणशौचकारणेन ते पूर्ववत् न आचरितवन्तः परिणाममिमं ज्ञात्वा भरद्वाजः कारणजिज्ञासया अन्धं गृहरक्षकम् अपृच्छत्। तदा शूद्रः यवक्रीतस्य मरणवृत्तान्तं श्रावयामास। तच्छ्रुत्वा भरद्वाजः प्राणशून्यं पुत्रमादाय अत्यन्तं विललाप।

हे वत्स! ब्राह्मणानां कृते अनायासेन वेदज्ञानप्राप्तये त्वं तपः तप्तवान्। ब्राह्मणेषु महात्मसु कल्याणकरव्यवहारमेव करोषि स्म्। सर्वभूतेषु दयालुः वम्। रैभ्यस्य विषये जागरूको भवेति बहुधा प्रोक्तवानहम्। अहम् एकपुत्रकः इति ज्ञात्त्वापि सः रैभ्यः त्वां मारयामास। हे वत्स! अहमपि प्राणान् त्यजामि इति वदन् अत्यन्तं विललाप।

**यथाहं पुत्रशोकेन देहं त्यक्ष्यामि किल्बिषी।**
**तथा ज्येष्ठः सुतो रैभ्यं हिंस्याच्छीघ्रमनागतम्।**
**सुखिनो वै नरा येषां जात्या पुत्रो न विद्यते।**
**ते पुत्रशोकमप्राप्य विचरन्ति यथासुखम्।**
**ये तु पुत्रकृताच्छोकाद् भृशं व्याकुलचेतसः।**
**शपन्तीष्टान् सखीनार्ताः तेभ्यः पापतरो नु कः।।**
**।।वनपर्व.१३७/१५,१६,१७।।**

यथा अहं पुत्रशोकेन देहं त्यक्ष्यामि तद्वदेव रैभ्योपि स्वज्येष्ठसुतस्य हस्ते एव मरिष्यति इति रैभ्यमुनिं शप्तवान्। पुनः इत्थं विलपति - लोके पुत्रहीनः सुखी भवति यतो हि ते पुत्रशोकमप्राप्य सुखिनः विचरन्ति। यः पुत्रशोकेन व्याकुलचेतास्सन् इष्टसखीन् शपति तेभ्यः पापतरो कः भवति। मया परासुः पुत्रः दृष्टः। अपि च सखा शप्तः। ईदृशीम् आपदं दुःखञ्च कः द्वितीयः अनुभविष्यति? एवं विलप्य पुत्रस्य दहनसंस्कारं समाप्य सोपि अग्नौ प्रविश्य प्राणत्यागं चकार।

अस्मिन्नेव काले राजा बृहद्युम्नः यज्ञानुष्ठानमारब्धवान्। तस्य यज्ञस्य यजमानः रैभ्यः, अर्वावसुः परावसुः सहायकौ आस्ताम्। एकदा अर्वावसुपरावसू यज्ञकार्यसम्पादनाय अगच्छताम्। आश्रमे केवलं रैभ्यः पुत्रवधूश्च आस्ताम्।

एकदा परावसुः एकाकी आश्रमं प्रति आगतः। तत्र कृष्णाजिनेन संवीतं पितरं दृष्ट्वा मृगः इति मत्त्वा अकामयमानः अपि शरीरत्राणाय तं मारयामास (शापप्रभावात्)। तदनन्तरं पितरं दृष्ट्वा शोकसन्तप्तो जातः। अनन्तरं पितुः प्रेतकार्याणि सर्वाणि समाप्य यज्ञमण्डपं प्रविश्य अतीतवृत्तान्तं सर्वं भ्रातरं निवेदयामास। अपि च ''त्वं एकाकी यज्ञकर्म वोढुमशक्तः यज्ञकर्मसम्पादने अहं निपुणः। अतः अहं राज्ञः यज्ञं कारयामि। त्वं मत्कृतब्रह्महत्यायाः प्रायश्चित्तव्रतं कुरु'' इतिपरावसुः आर्वावसुम् आदिदेश। भ्रातुः वचनानि श्रुत्वा अर्वावसुः ओमित्युक्त्वा ब्रह्महत्याप्रायश्चित्तव्रतं कर्तुं निर्गतः। परावसुः राज्ञः यज्ञकर्मकरणे निमग्नः। एकदा अर्वावसुः ब्रह्महत्याप्रायश्चित्तव्रतदीक्षां समाप्य प्रत्यागतः। तं दृष्ट्वा परावसुः गद्गदस्वरेण राजानं बृहद्युम्नमुद्दिश्य 'अयं ब्रह्महत्यापातकी। अतः यज्ञदर्शनायोग्यः' इत्युक्तवान्।

तच्छ्रुत्वा राजा बृहद्युम्नः तम् अर्वावसुं बहिः प्रेषयामास। सेवकाः तं ब्रह्महत्यापातकी इति सम्बोधयामासुः। 'मया ब्रह्महत्या न कृता मम भ्रात्रैव कृता' इति बहुधा उक्ते सत्यपि ते न अश्रौषुः। तदा अर्वावसुः तूष्णीं वनं जगाम। तत्र रहस्य-सूर्यसम्बद्धवैदिकमन्त्रजपम् अकरोत्। भगवान् सूर्यः सर्वे देवाश्च सुप्रसन्नाः। अतः ते वरदाने सुमुखतां प्रकटयामासुः।

तदा अर्वावसुः देवताः इत्थं वरयामास - मत्पिता जीवितः भवतु, मम भ्राता अनघः भवतु, अपि च पितृवधविषयः विस्मृतिं गच्छेत्, मुनिः भरद्वाजः, तस्य पुत्रः यवक्रीतः पुनरुज्जीवितौ भवताम्। रहस्यस्य सूर्यदेवसम्बद्धवेदमन्त्रस्य प्रतिष्ठा भवतु इति। तच्छ्रुत्त्वा देवाः एवमस्तु इति वरान् ददुः। देवानां वरप्रसादात् सर्वे पुनरुज्जीविताः।

जीवितः यवक्रीतः देवानुद्दिश्य - मया वेदाः समधीताः। व्रतानि आचरितानि। एवम् अधीयानं तपस्विनं मां रैभ्यः कथं हन्तुं शक्तः। एतत् कथमुचितम्? इत्यपृच्छत्। तदा देवाः - त्वं गुरुं गुरुशुश्रूषाञ्च विना सुखपूर्वकं वेदज्ञानमवाप्तवान्। किन्तु रैभ्यः तस्य पुत्रौ च अत्यन्तक्लेशेन गुरून् तोषयित्वा महता कालेन कष्टं सोढ्वा वेदज्ञानं प्राप्तवन्तः। इत्थम् उक्त्वा देवाः तान् सर्वान् जीवयित्वा त्रिविष्टपं जग्मतुः।

(अनुवर्तिष्यते)

श्रीमते रामानुजाय नमः

श्री न च रघुनाथाचार्यप्रणीता

# श्रीशेषाद्रीशस्तुतिः

## सुवर्णसौरभव्याख्यासमता

व्याख्याता - डा. कन्दाल लक्ष्मीनारायणः - नेल्लूरुः

चरवाणी - ९९८५२३७३५३

(तदनन्तरम्)

### वेङ्कटाचलपतेः औदार्यम्

श्लो४. वृषगिरिपतेरौदार्यं किं भणामि पदाब्जयोः
सकृदपि नतं पुष्णाति द्राङ्ग् महेन्द्राश्रयम्।
कलुषहरणं नाम स्वस्थाय यस्सकृदुच्चरेत्
सरसकवितासाम्राज्यस्य प्रभुं विदधात्यमुम्।।

ता - शेषशैलाधिपतेः श्रीपतेः दातृत्वगुणातिशयं वक्तुं न पारयामि। तस्य पादारविन्दयुगले एकवारं कृतः प्रणामोऽपि भक्तं सद्यो देवेन्द्रपदवीं प्रापयति। पापहारकं तस्य दिव्यं नाम येन सकृत् उच्चार्यते, तं भक्तं साम्राज्यस्यैव सार्वभौमं विदधाति।

सु.सौ.व्याख्या - ''चतुर्णां पुरुषार्थानां दाता देव श्चतुर्भुजः इत्युक्तरीत्या सर्वाभीष्टप्रदानशीलस्य भगवतः पद्मावतीजानेः औदार्यगुणसम्पत्तिः प्रस्तूयतेऽस्मिन् श्लोके।

औदार्यम् - उत् आङ् इत्युपसर्गपूर्वक रादाने इति धातोः क प्रत्यये उदार शब्दो निष्पन्नः। उत्कृष्टम् आसमन्तात् एति ददाति इति उदारः। तस्य भावः औदार्यम्। दातृत्वमित्यर्थः।



'दानं सप्रियभाषणमौदार्यम्' इति प्रियभाषणपूर्वकं यत्र देयवस्तु प्रदीयते तत् औदार्यमिति व्यवह्रियते इति साहित्यदर्पणकारः। अभिदानंमानविरहेण 'असौ स्वदायं भुङ्क्ते' इति बुद्ध्या दानं दातृत्वमिति, सर्वस्वं दत्वाऽपि अस्मैनोचितं दत्तमिति अतृप्तत्वमिति वा औदार्यमिति पूर्वाचार्या आहुः। पात्रलघुत्वं देयगौरवं च अविगणय्य प्रत्युपकारनिरपेक्षतया वितरणशीलत्व मौदार्य मिति च आहुः। सकलफलप्रदौ हि भगवान् स्वपदाश्रितान् आर्तादीन् प्रति स्वयमेवाह - उदारारुसर्व एवैते - ये मत्तः स्वाभीष्टान् प्रार्थयन्ते ते एवोदाराः इति इत्य श्रीहरेः औदार्यम् इयत्तया मातुं निगदितुं च न शक्यत इति भावः।

**सकृदपिनतम् -सकृत् एकवारम्। सकृत् सहैकवारे च -** ३.३.२४३ इत्यमरः। श्रीनिवास चरण कमलयोः एकवारं प्रणतमपि जनं तन्महिमा सद्य एव महेन्द्र पदवीमपि अध्यारोपयति। हरिस्मरण नामोच्चरण, मन्त्रजपादीनि सकृत् कृतान्यपि सद्यः फलं प्रदिशन्तीति स्मृतिषु प्रसिद्धम्

**सकृत् स्मृतोऽपि गोविन्दो नृणां जन्मशतैरपि।**
**पापराशिं दहत्याशु तूलराशि मिवानलः॥**
**बद्धः परिकरस्तेन मोक्षाय गमनं प्रति।**
**सकृदुच्चारितं येन हरिरित्यक्षरद्वयम्॥**
**सकृत् अष्टाक्षरं जप्त्वा फलं तस्य समश्नुते। इत्यादिभिः।**

तथैवोक्तम् -

**एकोऽपि कृष्णे सुकृतः प्रणामो दशाश्वमेधावभृथेन तुल्यः।**
**दशाश्वमेधी पुनरेति जन्म कृष्णप्रणामी न पुनर्भवाय॥**

- वासुदेव मुद्दिश्य एकवार मपि कृतः प्रणामो दशसङ्ख्याकैः अश्वमेधयागैः समफलः। साक्षात् अश्वमेधयाजकः फलानुभवानन्तरं पुनर्जन्म प्राप्नोति। सकृत् कृष्णप्रणामी तु पुनरावृत्तिरहितं मोक्षफलं लभत इति विशेष इत्यर्थः। मुकुन्द विषयक सकृत्प्रणामस्य वैभवमेवं प्रस्तुवन्ति च यामुनाचार्याः-

**त्वदङ्घ्रि मुद्दिश्य कदापि केनचित्**
**यथातया वापि सकृत् कृतोऽञ्जलिः।**
**तदैव मुष्णात्यशुभान्यशेषतः**
**शुभानि पुष्णाति न जातु हीयते॥ -**

**स्तो.र.२८**

- येन केनापि जनेन यदाकदापि काले यया कया च विधया श्रीहरिचरणारविन्दयोः कृतो नमस्कारः तस्य जनस्य सर्वाण्यपि पापनिशयित्वा सकलान्यपि शुभानि विदधाति। तस्य हीनत्वं न कदापि सम्भवति - इति।

**कलुषहरणम् - उच्चरेत् -** सकृत् उच्चारितमपि गोविन्द नाम भक्तस्य सकलमपि पापम् अपहरति। तदुक्तम् -

**सकृत् स्मृतोऽपि गोविन्दो नृणां जन्मशतैः कृतम्।**
**पापराशिं दहत्याशु तूलराशिमिवानलः॥**

एकवारं गोविन्दनामोच्चारणेऽपि बहुजन्मसञ्चितं सर्वमपि पापम् अग्निः तूलसञ्चयमिव नाशयति - इत्यर्थः।

सकृत् कृतं तन्नामस्मरणम् अथवा उच्चारणं तत्कर्त्रे भक्ताय असमानं वाग्वैभवं प्रदाय, तं सुमधुरकविताविशारदं करोति इति। श्रीमन्तो वेदान्तदेशिकवर्याः भगवतः कृपातिशयम् अभिवर्णयन्ति एवम् -

**अपिक्षणार्धं कलयन्ति ये त्वाम्**
**आप्लावयन्तं विशदैर्मयूखैः।**
**वाचां प्रवाहै रनिवारितैस्ते**
**मन्दाकिनीं मन्दयितुं क्षमन्ते॥ हय स्तो १४**

- ये भक्ताः सुविशदकन्त्या भासमानं हयग्रीवस्वामिनं क्षणार्धकालेऽपि सेवन्ते ते भक्ताः अनर्गलवचः प्रवाहैः हरिपादात् शिवशिरः पर्यन्तं वेगेन प्रवहन्तीं मन्दाकिनीमपि वेगे अतिशेरते। तादृशं वाग्वैभवं ते प्राप्नुवन्तीति भावः।

**रसयुग हयैः न्सौ म्रौ स्लौ गो यदा हरिणी तदा -** इत्युक्तलक्षणं हरिणी वृत्त मिदम्।

(अनुवर्तिष्यते)



# एकादशी

संस्कृतानुवादः - का. भास्करः
चरवाणी - ८१४३१५०८३३
तेलुगुमूलम् - श्री डी.श्रीनिवास दीक्षितुलु
चित्राणि - श्री के.द्वारकानाथ

मुरासुरस्य अकृत्यानि दृष्ट्वा देवाः, भूदेवी मिलित्वा ब्रह्मदेवं प्रार्थयन्ति।




भूमाता स्वीय बाधां निवेद्य रुदती देव! मुरासुरस्य पापभारम् अहं सोढुं न शक्नोमि। इति उक्तवती।

ब्रह्मा एवं वदति। कैलासं प्रति गच्छामः। शिवं मिलामः।



भूमाता, देवाः च ब्रह्मणा सह मिलित्वा कैलासं प्रति गतवन्तः शिवं प्रति निवेदितवन्तः शङ्कर! मुरासुरं संहर इति।

मुरासुरं श्रीहरिः एव संहर्तुं शक्नोति वैकुण्ठं गच्छमः।



सर्वे वैकुण्ठं गच्छन्ति।

विष्णुः अभयं दत्तवान्






विष्णुः बदरिकाश्रमं गत्वा गुहायां विश्रान्तवान्। तस्य शरीरात् एका अतिलोकसुन्दरी आविर्भूता। मुरासुरः तम् अन्विष्यन् तत्र आगतवान्।




सुन्दरी पृष्ठतः स्थिता गृहायाम्। मुरासुरस्य शब्दं श्रुत्वा अग्रे आगता। तस्याः दृष्टिः प्रसाद मात्रेण मुरासुरः दग्धः भस्मः अभवत्?




विष्णुः तस्याः एकादशी इति नाम अयच्छत्। विष्णुं सुन्दरीं प्रति।






अस्य चित्रपटस्य रञ्जनं कुर्मः वा?

प्रदत्तं चित्रपटम् अधोनिर्दिष्टप्रदेशे स्थापयामो वा?

बा ल वि नो दि नी





## रसप्रश्नाः

१. मयः कति मासेषु मयसभां निर्मितवान्?

२. मयसभायाः रुपकल्पना कः? कृतवान्?

३. नृसिंह द्वादशी कदा आचरन्ति?

४. सूर्य, कोटि, वयु तीर्थानि कुत्र वर्तन्ते?

५. वराहपुराणरीत्या जम्बूद्वीपस्य विस्तीर्णः कति योजनानि ?

६. प्रतिमासे प्रति सप्तमी दिने उपवासं भूत्वा आचरित व्रतस्य नाम किम्?

(समाधानानि -१.१४ मासेषु २.विश्वकर्मा ३.फाल्गण द्वादश्याम् ४.आरोग्य व्रतम् ५.मधुरा नगरे ६.लक्ष्य (१,००,०००))

भेदाः कुत्र?



(१.पाषाणं नास्ति २. मण्टपं नास्ति ३. सूर्यः नास्ति ४. शुकौ नस्तः ५. कण्कणं नास्ति ६. पुष्प सज्जिका नास्ति ७.एकः मानवः न दृश्यते)







# लघुप्रश्नोत्तरी





ऐदंप्राथम्येन सप्तगिरिमासपत्रिकायां लघुप्रश्नोत्तरी इति स्पर्धाकार्यक्रमः आयोजितः यत्र एतन्मासीयपत्रिकायां प्रकटितविषयाधारिताः प्रश्नाः भवेयुः। अतः हे बालबालिकाः! प्रतिमासं इमां पत्रिकां पठित्वा उत्तरदानप्रक्रियायां सक्रियं भागं वहन्ति खलु!

१. महाभारतयुद्धे द्वयोः पक्षयोः सैन्यप्रमाणं किम्?
२. महाभारतस्य कस्मिन् पर्वणि भगवद्गीता अस्ति?
३. पञ्चमहाकाव्येषु प्रथमं काव्यं किम्?
४. पञ्चमहाकाव्यानां व्याख्यानकर्ता कः?
५. संस्कृतस्य प्रथमः चम्पूग्रन्थः कः?
६. बृहत्कथा ग्रन्थस्य कर्ता कः?
७. प्रस्थानत्रयं नाम किम्?
८.शिवपञ्चायतनपूजायां के के पूज्यन्ते?
९. पूजायां पञ्च उपचाराः के?
१०. पूर्वं वेदशाखाः (अध्ययनपरम्परापद्धतिः) कति आसन्?
११. भारतीय लिपीनां सर्वासां मूललिपिः का?
१२. अमरकोशस्य प्रथमानुवादः कया भाषया कृतः?
१३. कस्यां तिथौ भारतं स्वतन्त्रम् अभवत्?
१४. जैन पञ्चाङ्गानुगुणं वर्षारम्भः कदा भवति?
१५. इदानीं कः कल्पः प्रचलति?

| समाधानानि |
|---|
| १. |
| २. |
| ३. |
| ४. |
| ५. |
| ६. |
| ७. |
| ८. |
| ९. |
| १०. |
| ११. |
| १२. |
| १३. |
| १४. |
| १५. |

## नियमावलिः

१. केवलं १० तः १५ वर्षीयाः बालाः हैन्दवाः अत्र भागं ग्रहीतुमर्हन्ति।
२. बालाः पत्रिकापुटे प्रदत्तस्थले समानभाषायाम् एव उत्तरं विलिख्य तत्पत्रं **The Chief Editor Office, Sapthagiri, T.T.D. Press Compound, K.T.Road, Tirupati 517507,** प्रति २५ दिनाङ्कात् पूर्वं प्रेषयेयुः। प्रतिकृतीः **(Xerox)** नैव स्वीक्रियन्ते।
३. बालानां पितरौ मासपत्रिकाग्रहीतारः **(Subsribers)** भवेयुः। तत्र नाम, सङ्केतः, दूरवाणीसङ्ख्या च उत्तरपत्रिकायां देया एव।
४. समाधानेषु त्रुटयः, समीकरणानि च न भवेयुः।
५. सर्वेषां प्रश्नानां समीचीनसमाधानं दत्तवन्तां त्रयाणां बालानां चयनं **DIP** द्वारा क्रियते।
६. विजेतृणां नामानि अग्रिममासीय सप्तगिरि पत्रिकायां प्रचुरितानि भवन्ति।
७. **Chief Editor** कार्यालयीयकार्यकर्तृपुत्रपत्रिकाणां च अत्र अवकाशो नास्ति।
८. अस्य कार्यक्रमस्य समाचारः दूरवाणीद्वारा नैव दीयते।

**Subscription Number** :
**Name** :
**Mother** :
**Father** :
**Address** :
**Phone Number** :

Printed by Sri P. Ramaraju, M.A., and Published by Dr. K. Radha Ramana, M.A., M.Phil., Phd., on behalf of Tirumala Tirupati Devasthanams and Printed and Publised at Tirumala Tirupati Devasthanams Press, K.T. Road, Tirupati 517 507.
Editor : Dr.V.G. Chokkalingam, M.A., Ph.D.

तिरुमलतिरुपतिदेवस्थानानि

# “श्रीस्वामिनः निर्माल्यपुष्पैः” निर्मिताः पदार्थाः

## फोटो फ्रेम्स् तथा की चैन्स् (ड्रै फ्लवर् टेक्नालजी उपयुज्य निर्मितानि वस्तूनि)




## धूपकाष्ठानि (स्वामिनिर्माल्येन निर्मितानि)



